मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ० प्र०) भारतम्

संपुटः ५ | 15 FEBRUARY 1967 | क्रमांकः २

शकवर्षः १८८८

माघाङ्क]

[मूल्यम् ४० पैसाः

# विषयसूची

## वटो वीटो

वटो त्वमल्पोसि, वटो त्वं लघुरसि,
वटो त्वं अनाकपोसि, वटो त्वं गुरुरसि,
वटो त्वं प्राणोसि, वटो त्वं प्राणघ्नोसि,
वटो लक्ष्मीप्रदोसि, वटो लक्ष्मी हरोसि ॥ वटो ॥

वटो बलिभञ्जनोसि, वटो जनरञ्जनोसि,
वटो नायकसेव्योसि, वटो सायकतुल्योसि,
वटो त्रिविक्रमरूपोसि, वटो पराक्रमदीपोसि,
वटो लोकाधिकदेहोसि, वटो विश्वातिगग्राहोसि ॥वटो॥

वटो कं बलिं पातयिष्यसि ? वटो कमिन्द्रं वर्धयिष्यसि,
वटो कथं पालयिष्यसि ? वटो विश्वं पालयिष्यसि ?
वटो भारतं रक्षिष्यसि ? वटो लोकक्षेमं करिष्यसि ?
वटो क्षामं करिष्यसि ? वटो क्षामं पूरयिष्यसि ? ॥वटो॥

# निर्वाचन कोलाहले हालाहलम

भारतदेशः प्रजातन्त्रमार्गे प्रविशन् प्रगतिपथं अनुसरतीति निस्संदेहोऽयं विषयः। आंग्लेया निष्कासिताः, संस्थानानि च निश्शेषितानि, फ्रेंच - डचादीनां अधिकारस्थानानि च भारते विलीनानि। अयोमार्गाः जीवितरक्षण (इन्सूरन्स्) विभागश्च प्रजायत्तीकृताः। एवं दुर्घटानि कार्याणि निर्व्यूढानि। अपि च पंचवर्ष-प्रणालीप्रयोगेण अनेका अभिवृद्धयस्साधिताः। बहवः कर्मागाराः निर्मिताः,जलाशयाः निबद्धाः, पाठशालाः संस्थापिताः, कृषिक्षेत्राणि साधनानि च बहुलीकृतानि।

अथापि देशे आहारसंकटः अतीव वर्धते। वस्तु दौर्लभ्यं जागर्ति। प्रजास्वसन्तोषः प्रवर्धते। उत्कोचग्रहणं साधारणमासीत। अविनीतिः प्रचुरा अभवत। अन्याय्यं विस्तृतमासीत। दण्डभीतिः अस्तृता। चौर्यादिकं दौष्ट्यं च विजृम्भते। कर्मचारिणां कर्मनिरोधः क्षणे क्षणे प्रत्यक्षीभवति। दुष्टानां वञ्चकानां अततायि-नामेव प्राबल्यमनुभूयते। एवं च प्रजाः सर्वा अपि ग्रामवासोदैन्यमनुभवन्ति। दुर्व्यापारिणः केवलं सुखं एधन्ते। एतेन प्रजानां प्रभुताया उपरि विद्रूप इव समुदभवत।

एवंविधदशायां अयं निर्वाचनकोलाहलः सम्प्राप्त आसीत। कांग्रेसस्य, जनसंघस्य, स्वतन्त्रपक्षस्य, समाजवादिपक्षस्य, द्राविडपुरोगामिपक्षस्य, मुस्लिम-लीगस्य एवमादेः अत्र निर्वाचने स्पर्धा प्रवर्तते। सर्वे च अभ्यर्थिनः निर्वाचकेभ्यः

बहुसम्पादनाय आत्मस्तुतिं परनिन्दां च कुर्वन्ति । प्रजाश्च एतद्वाक्यानि श्रावं श्रावं विहसन्ति विषीदन्ति विलज्जन्ते विस्मयन्ते च । तत्र तत्र समावेशेषु शिलाप्रहाराः पादरक्षाप्रक्षेपाश्च भवन्ति । कुत्रचित् जातिभेदावलंबकाः अभ्यर्थिनः तिष्ठन्ति । कुत्रचित् कुटुम्बादेव विरुद्धपक्षप्रतिनिधयः समुपतिष्ठन्ते । अन्ते तत्कुटुम्बानां का वा गतिर्भविष्यति न जाने । ऐकमत्यभासुरेषु ग्रामेषु निर्वाचनमूलकतया प्रज्वाल्यमानः विरोधाग्निः शाम्येत न वा को वा जनीते ?

कुत्रचित् प्रतिपक्षनायकप्रतिकृतिं गर्दभादिष्वारोप्य उपानन्मालयालंकृत्य अवाच्यवचनैः सह नगरयात्रामकुर्वन् केचिदिति महाघोरमेतत् । एकं अभ्यर्थिनं अव्यभिचरितविजयं हन्तुमेव परपक्षीयः गुळिकां प्रायोजयदिति ततोपि घोरतरं कर्म । प्रधानमन्त्रिण्या दन्तनासिकं अभञ्जयन् दुष्टाः केचिदिति दौष्ट्यस्य पराकाष्ठायाः निदर्शनम् ।

अस्मिन् द्रव्यसंकटसमयेपि तत्तत्पक्षाः धनं जलमिव व्यययन्तीति महत् आश्चर्यम् । धनवन्तः तत्तत्पक्षाभिमानिनश्च गूढं धनं लक्षशः अनुददतीति अहो दातृता । सत्कार्येषु न किंचिदर्पयन्ति एते महानुभावाः, अपि तु अस्मिन् द्यूते स्वपणानि निश्शेषं समर्पयन्ति ।

इदं महच्चित्रं यत्— निर्वाचनार्थी धनं एतावदधिकं न व्यययेदिति नियमे जाग्रत्यपि, अपरिमितं तत् प्रकटं व्ययित्वा उत्तीर्य शासनदण्डस्य अविषयो भवतीति ।

कांग्रेसेतराः पक्षाः कांग्रेसपक्षे लक्षशः दोषान् आरोपयन्ति । किं बहुना कांग्रेसपक्षादेव पृथग्भूतः प्रजाकांग्रेसपक्षः तं नितरां शपति । कांग्रेससिद्धान्त-घातिनः तत्रत्यान् वदन्ति । विंशतिवर्षपालने तेषां मुखात् कष्टान्येव अविका-

न्यासन्निति इतःपरमपि अधिकारस्य तदायत्तीकरणे इतोपि बाधा एव सोढव्या इति च वदन्ति अन्ये। आत्मायत्तीकरणे च शासनस्य भारतस्य स्वनीतापादनं ते प्रतिजानते।

कांग्रेसीयाः तु इतरान् पक्षान् प्रभुत्वस्थापनशक्तान् निरूप्य तेभ्यो दत्तानां सम्मतीनां च वैयर्थ्यं प्रतिपाद्य आत्मविजये एव साह्यमभ्यर्थयन्ते। स्वसाधितान् विशेषान् प्रकटय्य एतद्वारमपि अवकाशप्रदाने इतोपि प्रजासेवाकरणे सौविध्यं भवेदिति वदन्ति। एवं परस्परविरुद्धभावप्रकटनेन पामरजनानां मनांसि कलुषितानि वर्तन्ते। पामराणां च विद्यायाः लोपात्, विवेकस्य न्यूनत्वात्, स्थानिककर्षकप्रमुखाणां वशत्वेन, धनाशाविवशत्वेन च वटास्त्राणि अनिर्दिष्टलक्ष्यकाणि कुत्र लगेयुः को वा ज्ञातुं शक्नुयात्?

सर्वेऽत्र सुखिनस्सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग् भवेत्॥

# राजाजीकथा ३२

## नासाभरणम्

लेखकः – आ० वरदराजन्

रामार्यस्य गृहांगणे कपोतपालिकायां अप्रधृष्ये कस्मिश्चित् स्थाने द्वौ चटकौ कुलायं निर्माय सह जीवतः स्म।

"अयि भद्रे!" – चटकश्चटकामाह।

"किं भोः! का वार्ता? – इत्याह चटकाऽपि।

"इयं गृहिणी किमिति सदा भर्त्रा सह विवदमाना वर्तते" इति पृष्टं चटकेन।

"अहं किं जानामि?" – इति प्रत्युक्तं चटकया; "पराधिकारचर्चा माऽस्तु नः। यदस्मत्प्रयोजनं तद्द्रष्टव्यं" इत्यप्युक्तम्।

"त्वमेव ब्रूषे सदा सर्वदा, स्वार्थमेव पश्यसि इति, तपस्वी किल स ब्राह्मणः रामार्यः, किं तस्य साहाय्य नास्माभिः कर्तव्यम्" इत्याह चटकः।

"ओ! बहु खलु त्वं साह्यं कर्तुं प्रभवसि। अलमधिकप्रसङ्गेन। अस्मत्कुलाये अण्डान्यपहर्तुं मार्जारो यथा नाऽयाति तथा द्रष्टव्यम्" – इति प्रत्याह चटका।

★ ★ ★

यत्र क्वाऽपि कस्मिंश्चित् अपवकरे वज्रखचितं नासाभरणं पतितमासीत् । चंचुपुटेन तत् गृहीत्वाऽगतः चटकः ।

"अयेऽदः पश्य । किमिदं नासाभरणं तवाभीप्सितं" – इति सादरमाह चटकाम् ।

"नासाभरणं माऽस्तु, कर्णाभरणं माऽस्तु । क्रिमिकीटादिकं यत्किञ्चि-दुपलभ्यते वा पश्य । एषां शावकानां क्षुज्वाला महती" – इत्याह चटका ।

चटकः नासाभरणं अधस्तात् प्रच्याव्य क्रिमिकीटादि मृगयार्थं यत्र क्वाऽपि गतः ।

रामार्य-भार्या गृहं सम्मार्जयन्ती तन्नासाभरणं दृष्टवती । मुखं पिधाय शनैः तद्गृहीत्वा नासायां धृतवती ।

"कुतस्तन्नासाभरणं लब्धं ते ? को वा बालिशो जारस्ते तद्दत्तवान् ? इति रामार्यः महता कोपेन पप्रच्छ ।

"ह्यस्तदत्र पतितमुपलब्धं, गृहीत्वा धृतवत्यहं' कुतस्त्वमित्थं अस्त-व्यस्तं भाषसे ? " – इति भार्या प्राह ।

"परद्रव्यमुपलब्धं चेत् ग्रामणी-महोदयाय देयं खलु । श्वः पालेशाः (Police) आगत्य गृहं परीक्षेरन् यदि कस्य स्यादवमानः ? " इत्याह रामार्यः ।

"नाऽहं दातुमुत्सहे, इदं मदुपलब्धं मदीयमेव; न दास्यामि नैव दास्यामि" – इत्याह सा हठिनी कठिनम् ।

*　　*　　*

प्रातिवेशिकगृहे प्रवृत्तमिदं सम्भाषणं – "स्नानागारेऽम्ब ! निक्षिप्तवत्यस्मि!! सम्मार्जनसमये सा पापीयसी गृहदासी सम्मार्जन्या यत्र क्वापि विक्षिप्य प्रक्षिप्तवती स्यात् । मन्दबुद्धिः मतिभ्रष्टा न जानाति किमपि" – इति लक्ष्मीः प्राह मातरं प्रति ।

"स्यादपि, परन्तु इयान् मति-भ्रंशश्चेत, कथमये ? इतस्ततः कोणेषु परिशीलय । पित्रे न वक्तव्यमिदम् । नासाभरणं क्वचिद्गलितं भ्रष्टं इति ज्ञातं चेत अतीव कुपितः स्यात्" – इत्याह सुब्बम्मा ।

"किमेतत्, रहस्यभाषणं मातुः सुतायाश्च" इति पृष्टं रामनाथरावु महाशयेन ।

विदितो वृत्तान्तः । अनन्तरं ग्रामे सर्वत्र व्याप्तश्च । रामनाथार्यस्य गृह - दासी अक्कम्मा नासाभरणं अपहृतवती – इत्येवं वक्तुं प्रवृत्ताः । पालेशाः रक्षकभटा अक्कम्मायाः गृहं परीक्षाञ्चक्रुः । सर्वं गृहं शोधितम्, किन्तु न तल्लब्धम् ।

रामार्यस्य गृहिण्याः विपरीतो ज्वरवेगः । आस्तृता शय्याऽस्तृतैवासीत् । सा शय्यां गता । रामार्यस्यापि महती भीतिः प्रवृद्धा; हृदयस्पन्दनमपि अधिकमासीत् । परन्तु तस्य गृहं शोधयितुं न कोऽप्यागतः ।

"बाले ! कटाक्षितः खलु विनोदोत्सवः" – इत्याह चटुलश्चटकः ।

"महानुत्सवो विनोदस्य!! वराका इयं गृहिणी वृथा भीत्या ज्वरार्ता । ज्वरवेगेनाऽऽहता मृता भवेदिति मन्ये" – इत्याह चटका ।

"साधु, साधु" – इत्याह चटकः ।

"इदं सर्वं त्वयैव कृतं" इत्याह चटका ।

"किं मयोक्तं, चौर्यं कर्तव्यमिति ? भर्त्रोक्तमश्रुत्वा मौर्ख्यं साधयति चेत अयमीदृश एव परिणामः" इत्याह चटकः महता गांभीर्येण ।

"हंभो ! त्वदीयं वचः कदाऽपि न न श्रुतमिति, श्रोष्यामि करिष्यामि च यथोक्तं" – इत्याह सविनयं चटका । "युक्तमुक्तं" इत्याह चटुलश्चटकः ।

"एहि, मयाऽयाहि; शावकानां यानि कानिचित क्रिमिकीटकादीनि गृहीत्वाऽगच्छाव" इत्युक्त्वा चटकौ टिर् - टिर् - टिरिति उड्डीय गतौ ।

तद्गृहं नरकायैव यस्य पत्नी विवादिनी ।
नासाभरणवृत्तान्तात् दम्पती कलहो गतः ॥

चिन्ता चिता द्वयं चैव भस्मसात्कुरुते नरं ।
पूर्वा दहति जीवन्तं द्वितीया तु गतायुषम् ॥

स्त्रीणां भर्तृषु वाल्लभ्य मुच्छृङ्खलमिति स्मृतम् ।
तद्विश्वासबलेनैव स्त्रीणामाभरणे स्पृहा ॥

# सुभाषितानि

श्री० यन्० रामनाथार्यः

अतिकुपिता अपि सुजनाः योगेन मृदूभवन्ति न तु नीचाः ।
हेम्नः कठिनस्यापि द्रवणोपायोस्ति न तृणानाम् ॥ ॥ २२४ ॥

It is easy to pacify a good person, though he is very angry, by some method or other; it is difficult with a low person. Though hard, gold can be melted by some means but not the grass.

क्षते प्रहाराः निपतन्त्यभीक्ष्णं धनक्षये वर्धते जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥२२५॥

Blows fall repeatedly on the wounded portion of the body; craving for food increases with poverty; enmities increase during distress; calamities multiply during misfortunes.

दाता लघुरपि सेव्यः भवति न कृपणो महानपि समृद्ध्या ।
कूपान्तस्स्वादुजलः प्रीत्यै लोकस्य न समुद्रः ॥ ॥ २२६ ॥

Even an ordinary person charitably disposed may be approached for favours but not a miser though considered great on account of his riches. People like the sweet waters inside the well but not the waters of the sea (which is greater in quantity but saline.)

मूर्खोऽपि शोभते तावत् सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खः यावत्किंचिन्न भाषते ॥ ॥ २२७ ॥

Even a fool, well dressed, appears decent in an assembly (of learned men). But his esteem lasts only as long as he does not open his mouth.

धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेय आरोग्यं सुखानां तुष्टिरुत्तमा ॥ ॥ २२८ ॥

Cleverness is the greatest of all aquisitions, learning is the greatest of all riches, health is greater than all other fortunes and contentment is greater than all other happiness.

[क्रमशः]

# मानवसेवा हि माधवसेवा

## लेखकः - के. सूर्यनारायणरेड्डिः

मानवः विशेषमानसिकसंपद्विशिष्टः चराचरवस्तुसृष्टयुन्नतः सर्वत्र स्वाग्रगण्यत्वं आधिपत्यञ्च निर्धारयति। विलक्षणमेधावैभवेन जीवितसौख्यानि परिकल्प्य प्रवर्धते। तथापि एवंकृतविशेषकुषिरेव मानवः स्वसौख्याय अन्यं स्वप्रयोजनार्थे विनियोजयति। परस्परसहायसहकारैः, अनर्घशान्तियुतसहजीवनलक्ष्यैः नियमनिबन्धनैः समष्टिजीवितं यापयति। मानव एव सहकारिणः कष्टनष्टे अजानन् वक्रमार्गजीवनमेवं करोति चेत् लोकः किं विपरीतो न भवेत। मानवव्याप्तेऽयं वक्रबुद्धिरपि ऐश्वर्यदारिद्र्ययो कारणभूता सती द्वन्द्वस्य प्रवर्तनी भवति। भगवान सर्वान मानवान् समानतया असृजत। तथापि स्वार्थपराणां संकुचितभावैः कष्टसुखदारिद्र्यैश्वर्यद्वन्द्वानि समागतानि। बहुयुगेभ्यः धूर्तकृतेन विनाशेनैव मानवलोके इयं विषादावस्था विस्तृता प्रवर्धते। मानवत्वममकारेण कैश्चिन्महानुभावैः कृतैः धूर्तप्रातिकूल्यनर्घत्यागौदार्यादिभिः एव प्रपंचोयमद्यापि जीवति।

परमकारुणिकः भगवान् प्रजावैभवोन्नतावनतौ धूर्तप्रवृद्धिं च न सहेत। अतः अस्यामव्यावस्थां धूर्तान् नाशयितुं लोके तदा तदा अवतरत्येव। स एव गीतायां प्राह किल परित्राणाय साधूनां विनाशाय च दुष्कृतां धर्मसंस्थापनार्थाय संभवामि युगे युगे इति।

एतादृशाः भगवदवताराः समाजाः आदर्शव्यक्तयः यदि न भवेयुः लोकोऽयं नरककूप एव स्थितो भवेत्। बुद्धदेव, महात्म, शास्त्र्यादय मानवोद्धरणाय उदिता भगवन्मूर्तय एव। एतदृष्टादर्शसारांशः मानवे दैवत्वसन्दर्शनमेव। मानवसेवा एव माधवसेवेऽति अस्य गूढाभिप्रायः। सौख्यजीवनायैव परस्परसाहाय्यमपेक्ष्यते। परन्तु केचित जीवनशीलदुर्भगाः सन्ति। कोटिशः विद्यमानानां एतादृशानां दुर्भगानां रक्षणसेवाभारवहनमेव माधवसेवा भवति। एतादृशानां सेवा एव करुणामयभगवत्सेवा भवति। लोके वञ्चयित्वा भगवते धनदानेन

नैवेद्यदानेन पापपरिहारो न भवेत । इयं भगवत्सेवा न भवति । अपितु भगवद्वञ्चनमेव । अतः वञ्चकाः स्वबुद्धिं परिणमय्य दैवस्वरूपदरिद्रनारायणसेवां कुर्युः । गान्ध्यादयः एतदेव वाक्यमवोचन् ।

एतावत्पर्यन्तं बहुदेशप्रादुर्भूतानि बहुमतानि आमुष्मिकवैभवव्याजेन मानवसेवामेव बोधयामासुः । दरिद्रमानवसेवा माधवमेवेति व्याख्यानं चक्रिरे । तत्साधनायैव अनेककार्यक्रमान् प्राचालयन् । आर्थिकराजकीयसामाजिकसम्बन्धकम्यूनिजादिवर्गा अपि सर्वसमानतानुभवश्रेयोराज्यसंस्थापनायैव यतन्ते । एते श्रेयोराज्यसंस्थापनालक्ष्या अपि मानवसेवा एव माधवसेवेति परमार्थं प्रकाशयन्ति । आधुनिक मानवे लक्ष्यसाधनाय त्यागौदार्यादिगुणाः न सन्ति । भौतिकवस्त्वपेक्षा एव एत मूलधातुर्भवति । दुर्धर्षदृष्टिरेवेऽयं मारणास्त्रनिर्माणरूपा प्रपञ्चप्रणयाय न प्रपञ्चप्रलयाय प्रोदेति । दृष्टिमेनां निर्मूलयितुं सर्वपक्षैः बहवः प्रयत्नाः क्रियन्ते । देशीयसर्वप्रजाभिश्च एतच्छ्रेयोमहालक्ष्यसाधनाय यथाशक्तिसहकारः विधेयः भवति । भारतीयप्रणालिकाविजय एव दरिद्रमानवविजयः, एतद्दरिद्रमानवसेवा एव माधवसेवा भवति ।

आध्यात्मिकतत्त्ववैभवानां सत्याहिंसासत्त्वधर्माणां च प्रख्यातः भारतदेशः सामुदायिकवृद्धये यतते । कार्यक्रमाणां एतेषां विजय एव दरिद्रमानवसेवाविजयो भवेत् । दरिद्रमानवपरितृप्तिरेव सर्वथा देशकल्याणदायिनी भवति । अतः धनिककार्मिकविज्ञानवर्गीयाः देशकल्याणाय क्रमेण धनज्ञानश्रमदानानि कृत्वा सहकुर्वन्तु । विनोबाभावे अशेषप्रयासान् अवगणय्य सर्वोदयसिद्धान्तप्राशस्त्यं उद्घोषयन् लक्षाधिकैकरापरिमाणभूमिं धनिकेभ्यः सम्पाद्य अकिञ्चनेभ्यः दानत्वेत ददौ । साक्षादयं भगवदंशावतार एव । एवं प्रजाकृताः मानवसेवाः देशसंपत्कल्याणहेतवो भवन्ति । प्रभुत्वसेवा एव मानवसेवा, सा एव तत्त्वतः माधवसेवा भवति । अतः मूलभूतप्रजापालकसर्वकारसहकारः विधेयो भवति । सर्वकारः देशपुनर्निर्माणमहाप्रयत्नाय तत्साधननिमित्तधनार्थं प्रजाभ्यः ऋणरूपेण तत स्वीकरोति । अतः एवं प्रभुत्वाय ऋणदानेन कुटुम्बाय कालान्तरे उपयुज्येत । आपतिते अधिकधनावसथे कोडीकृतं तद्धनं उपयुज्येत । प्रभुत्वसहकारश्च कृतो भवेत् । एवं ऋणदानेन यथाकथंचित देशाभ्युदयाय कृतसहकारेण स्वभाविसन्ततेः श्रेयः भवेतु ।

# विद्या सर्वस्य भूषणम्

## रचयिता - के. वेंकटरेड्डि

### श्रीकृष्णगीताश्रमः

विद्या सर्वस्य भूषणम् । वाक्यमिदं सर्वैः ज्ञातमेव । अहं विद्यां अधिकृत्य लिखाम्यल्पवाक्यान्येव । विद्यैव नरस्य भूषणं न तु धनं आभरणानि च । विद्या मातेव रक्षति, पिता इव हितं करोति, भार्या इव दुःखं अपनीय सन्तोषं जनयति, कीर्तिं सर्वत्र विस्तारयति । एवं स्थिते विद्या कल्पलतेव किं किं न साधयति ? सर्वाणि कार्याणि साधयति । विद्या गुप्तं धनं, विद्या गुरूणामपि गुरुः । नभसः चन्द्रः एव भूषणं; पृथिव्याः राजा, तथा नारीणां तु पतिः । किन्तु विद्यायाः महात्म्यं महत् । "विद्या सर्वस्य भूषणम्" । मूर्खः स्वगृहे एव पूज्यते । प्रभुः स्वग्रामे एव पूज्यते । राजा तु स्वदेशे एव पूज्यते । किन्तु सर्वत्र कः पूज्यते ? विद्वानेव सर्वत्र पूज्यते । विद्या व्यये कृते सति वृद्धिमेव प्राप्नोति न तु क्षीणतां । इयं विद्या न चोरहार्या न भ्रातृभाज्या इति बुधाः वदन्ति । विद्या विनयं ददाति, विनयेन गौरवं भवति, गौरवेण पात्रता भवति । विद्वान् धनं सुखं च प्राप्नोति । विद्यया धर्मादिगुणानपि साधयितुं शक्यते । विद्या विदेशगमने बन्धुरिव साहाय्यं करोति । कोऽपि जनः राजसभासु विद्यया एव गौरवं प्राप्नोति -

पलाशपुष्पं अतीव रमणीयं अधिकमाकर्षकं च भवति । सर्वलक्षणसम्पन्न। मिदं पुष्पं निर्गन्धम् । तेन कारणेन सर्वैः विगर्हितं एव । तथैव रूपयौवनसंपन्नोऽपि विशालकुलोद्भवोपि जनः विद्याविहीनः चेत् पलाशकुसुममिव न शोभते । "विद्याविहीनः पशुभिः समानः" इति सर्वैः उच्यते । विद्याविहीनः हंसशतमध्यस्थितः बक इव न शोभते । विद्यायाः महात्म्यस्य निरूपणार्थं एव एका कथा अत्र लिख्यते ।

एकस्मिन् ग्रामे द्वौ सखायावास्ताम् । तयोः एकः विद्याप्रियः । अन्यस्तु धनप्रियः । एकदा तौ पित्रोः आज्ञया देशान्तरं गतौ । विदेशे तयोरेकः विद्याप्रियः विद्यालयं प्रविश्य विद्यां अधीतवान् । अन्यस्तु श्रेष्ठिनः आपणे वित्तम् अर्जति स्म । दशवर्षाणां अनन्तरं तौ स्वग्रामं प्रत्यागतौ । तयोः आगमनसमये मार्गे वनमध्ये धनप्रियस्य धनभाण्डं चोराः अपाहरन् । तेन कारणेन सः निर्धनो जातः । यदा तौ स्वदेशमागतौ धनप्रियस्य जीवनमेव दुर्भरमासीत, तदा विद्याप्रियं विद्वांसं परिशील्य, राजा मन्त्रिपदे न्ययोजयत् । धनप्रियः तु राज-सकाशे एव सेवकरूपेण निवसति स्म ।

पण्डिताः सर्वे एवं कथयन्ति –

दिवा पश्यति नोलूकः काको नक्तं न पश्यति ।
विद्याविहीनो मूढस्तु दिवा नक्तं न पश्यति ॥

अतः सर्वैः विद्यासम्पादने यत्नः आस्थेयः ॥

## लघुकथा - ४

# प्रतीपगामिनामानुकूल्यम्

लेः वः रामानुजाचार्यः, पैत्तवाडि.

★

उद्यानगृहवासी परमशिवः कश्चित् लोकविचित्रस्वभावः मनुष्यः इति वक्तव्यम्। तदर्थं केचित् विषयाः उदाह्रियते। पश्यन्तु तावत्। स प्रतिदिनं दैनिकसंचिका वा साप्ताहिकी वा सर्वा अपि अन्तिमपृष्ठादारभ्य पठन् प्रथम पृष्ठे समपूरयेत्। वयं स्नानानन्तरं खलु भोजनादिकर्माणि कुर्याम। स तु न तथा। भोजनमारभ्य स्नानान्तकर्माणि करोति। भोजनेऽपि प्रथमतः तक्रान्नं अन्ते सुपाद्यान्नं भुक्ते। तथैव मध्याह्ने अस्माकं प्रथमतः भक्ष्यादि ततः तीर्थादि। अस्य तु तीर्थाद्यनन्तरं भक्ष्यादि। अनेन सर्वमपि प्रातिलोम्येन क्रियते। यदि केनचित् किमिति प्रातिलोम्येन अचर्यते भवद्भिः इति पृष्टः — "मनुष्यास्सर्वेऽपि यदि समानाः तत्र को विशेषः, व्यत्यास आवश्यकः" इति दृढं वदति। वयं प्रातः उत्थानसमये पूर्वतनदिनप्रकाशनपत्रं परिहरामः। स तु पूर्वेद्युरात्रावेव शयनसमये तद्दिनपत्रं परिहरति। वीथीः परिक्रम्य गृहागमनानन्तरमेव पादरक्षे स्वीकरोति सः। किञ्च स्वनामांकितदारुफलकां स्वोद्यायपूर्वभागे अस्थापयित्वा पृष्ठभागे अस्थापयत्। स्वोद्यानरक्षकभटं सायमेव तद्गृहं संप्रेष्य परेद्युः प्रातः आगमयति। कदाचित् तस्य पत्नीपुत्रपुत्र्यादयस्सर्वेऽपि आवश्यककार्यार्थं ग्रामान्तरं गताः। तदा अयमेक एव गृहे अतिष्ठत्। यथा तथा वा भवतु सः। यदि निद्रितः तदा स कुम्भकर्णसोदर एव। यदि भूकम्पो जातोऽपि नोत्तिष्ठेत्। तस्य शयनगृह एव धनभूषणादीनां निक्षेपपेटिकाऽपि निक्षिप्ताऽभूत्। तदा अस्य निद्रासमये एकश्चोरः

तदुद्यानभित्तिकादीनतिलंघ्य तच्छयनगृहभित्तिकायां सुरंगं कृत्वा तच्छिरोभागे उद्घाटनसाधनाय: कुञ्चीवलयं अन्विष्य अलाभात् शिर एव पार्श्वतरसंवेश्यपि अलाभतः भित्यादिषु सर्वत्र परिमृग्यपि अयस्साधनं एकमपि यावन्नलेभे तावत् क्वचित्स्थितः घटिकायन्त्रः "टङ्, टङ्" इति पञ्च घण्टा अताडयत्। तत् श्रुत्वा चोरः इतःपरमवकाशो नास्तीति स्वत्रशस्थायससाधनैः उद्घाटयितुं आर्धघण्टं श्रमतः कृतप्रयत्नोऽपि अशक्तः इतःपरं अत्र यदि स्थितेऽहं कारागृहमेव लभेयं इति भीतः अलब्धधनादिलेशः अरुणोदयात्पूर्वमेव बहिरधावदभाग्यशाली सः । तदा तद्धस्ते यदि लब्ध उद्घाटनसाधनयन्त्रवलयः दशसहस्राधिकरूप्याणि तदधिकमितभूषणादिद्रव्याणि च चोरगृहीतानि भवेयुः । ततस्स परमशिवः प्रभाते उद्बुध्य उत्थाय शयनगृहात् बहिर्गत्वा उद्घाटितान् कवाटादीन् वीक्ष्य चोरागमनं विदित्वा नितान्तखिन्नः सत्वरं अन्तःप्रविश्य स्वशयनीयपादस्य मूले पूर्वनिक्षिप्तं वलयजातं तथैव स्थितं दृष्ट्वाऽपि संशयितः पेटिकामुद्घाट्य तथैव स्थितं वस्तुजातं दृष्ट्वा तुष्टोऽभूत् । सर्वैः शिरोभागे निक्षेप्तव्यस्य वलयजातस्य अनेन पादभागे निक्षिप्तत्वात् सर्वं न चोरितम् ।

॥ श्रियै नमः ॥

# श्रीलक्ष्मीनरसिंहसुप्रभातस्तवः

लें० "वैद्यविद्वान्" श्रीमद्भागवतं लक्ष्मीनृसिंहाचार्यः

कौसल्या सुप्रजाराम ! पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ ! नरशार्दूल ! कर्तव्यं दैवमाह्निकम् ॥

जगन्मङ्गलसंधात्रि ! सुप्रभाभासिते ! रमे !
अप्रमेयगुणावासे ! सुप्रभातं तवास्त्विह ॥

उत्तिष्ठ ! नरहर्यक्ष ! उत्तिष्ठ ! कमलापते !
उत्तिष्ठ ! मङ्गलाद्रीश ! निद्रां योगमयीं त्यज ! ॥

जय ! प्रह्लादवरद ! जय ! श्रीगरुडध्वज !
लक्ष्मीनृसिंह ! विजयिन् ! त्रैलोक्यं मङ्गलं कुरु ॥

लक्ष्मीसविभ्रमकटाक्षशतैकलक्ष्य !
लक्ष्मीपदाब्जपरिचिह्नितदिव्यवक्षः !
लक्ष्मीलसत्कुचसरोरुहराजहंस !
लक्ष्मीनृसिंह ! भगवंस्तव सुप्रभातम् ॥

ज्वालानृसिंह ! विधिरुद्रकिरीटरत्न-
रोचिःप्रभासितनिजांघ्रिसरोज ! देव !
वेदाद्रिवास ! वरदाच्युत ! पद्मनेत्र !
लक्ष्मीनृसिंह ! भगवंस्तव सुप्रभातम् ॥

श्रीमन्! नृसिंह! करुणावरुणालय! त्वं
निद्रां विहाय परिवाहय! मय्यनन्ताम्।
भावत्कदिव्यकरुणालहरीमितस्तां
लक्ष्मीनृसिंह! भगवंस्तव सुप्रभातम्॥

लक्ष्मीः प्रिया तव *तुरीयतनुं निषेव्य
तन्वी हसत्यरुणरागरुचिं विभाव्य।
गात्रे स्वके नखभवां क्षतिमार्तसेव्य!
लक्ष्मीनृसिंह! भगवंस्तव सुप्रभातम्॥

कन्दर्पकोटिगुणमंजुलदिव्यमूर्ते!
कस्तूरिकाकलितचन्दनचर्चिताङ्ग!
पद्माङ्गरागपरिशोभितगंडभाग!
लक्ष्मीनृसिंह! भगवंस्तव सुप्रभातम्॥

देवाः पचेलिमरुषं तव भूतपूर्वां
संस्मृत्य मूर्तिमिह चाप्यतिभीतभीताः।
उत्तिष्ठ! ते सममभिलन्ति दिदृक्षवस्त्वां
लक्ष्मीनृसिंह! भगवंस्तव सुप्रभातम्॥

सेनापतिं तव सरूपमिहावलोक्य
द्वारे वसन्तमपि सन्तमहो! नमन्ति।
त्वद्भ्रान्तिविकलबधियस्सुधियो दयस्व!
लक्ष्मीनृसिंह! भगवंस्तव सुप्रभातम्॥

---

* नृसिंहात्मकं विचित्रं देहमिति भावः। अस्य तुरीयावतारत्वात् तत्सङ्गतिः।

"त्वद्दासवैरिहननात् खलु ते नृसिंह !
नामेदमर्थवदि" तीव निपत्य सिंहः ।
प्रातर्विरोति सविधे मृगराजराज !
लक्ष्मीनृसिंह ! भगवंस्तव सुप्रभातम् ॥

भास्वानुदेति विकसन्ति नवाम्बुजानि
गाढान्धकारनिवहं गगनं जहाति ।
त्वद्दिव्यधाम विविशुर्भवदर्चकास्ते
लक्ष्मीनृसिंह ! भगवंस्तव सुप्रभातम् ॥

॥ इति सुप्रभातस्तवस्सम्पूर्णः ॥

## श्रीलक्ष्मीनृसिंह प्रपत्तिः

★

प्रह्लादमानससरोवरराजहंसौ
संक्रन्दनादिपरमर्षिनिषेव्यमाणौ ।
लोकत्रयैकशरणौ तरणी भवाब्धेः
लक्ष्मीनृसिंहचरणौ शरणं प्रपद्ये ॥

लक्ष्मीकराग्रनवपल्लववाह्यमानौ
वेदस्वरूपविनतासुतबाहुवासौ ।
शेषप्रजावनिचमूपतिपूज्यमानौ
लक्ष्मीनृसिंहचरणौ शरणं प्रपद्ये ॥

॥ इति प्रपत्तिस्सम्पूर्णा ॥

॥ मङ्गलाशासनम् ॥

मङ्गलं देवदेवाय
महनीयगुणाब्धये ।
राज्यलक्ष्मीसमेताय
नरसिंहाय मंगलम् ॥

मंगलं वेदवेद्याय
भक्ताभीष्टप्रदायिने ।
गुडोदनप्रियायास्तु
नरसिंहाय सर्वदा ॥

मंगलं श्वेतसिंहाय
मंगलाद्रिनिवासिने ॥
प्रह्लादरक्षकायाऽस्तु
नरसिंहाय मंगलम् ॥

स्तम्भोद्भवाय वन्द्याय
शुभदंष्ट्रामुखाय च ।
डिम्भावनैकदीक्षाय
नरसिंहाय मंगलम् ॥

॥ इति मङ्गलाशासनं सम्पूर्णम् ॥

॥ फलश्रुतिः ॥

लक्ष्मीनृसिंह ! भवतः किल सुप्रभातम्
लक्ष्मीनृसिंहगदितं य इदं प्रभाते ।
नित्यं पठेदपि च संश्रुणुयादसौ ते
दिव्यं परं पदमवाप्स्यति जीवितान्ते ॥

॥ इति सम्पूर्णोऽसौ स्तवः ॥

ॐ तत सत्

# सुलभपाठमाला २९

## गृहम् - ४

मम अंबा प्रातः [1]सम्मार्जन्या गृहं शोधयति । [2]हसन्त्यां अंगारान् निक्षिप्य अग्निं प्रज्वाल्य तदुपरि पात्रिकां निधाय जलं [3]क्वथयति । ततः तस्मिन् जले [4]कफचूर्णं प्रक्षिप्य विलोड्य पृथक् स्थापयति । ततः क्षीरं हसन्त्यां क्वथयति । अनन्तरं [5]कफकषायं वस्त्रेण चालन्या वा गालयित्वा तत्र क्षीरं शर्करां च संमेलयति । एवं च कफपानीयं सिद्धं भवति । अस्मान् आहूय प्रत्येकं पात्रिकासु पानीयं ददाति । कदाचित् [6]दोषकं [7]इड्लीकं [8]पिष्टकं अन्यद्वा भोजयति ।

ततो वयं पाठान् पठामः लिखामः रिक्तपुस्तकेषु [9]लेखन्या [10]मषीवाहिन्या वा । कञ्चित्कालमेवं नीत्वा स्नानगृहं गच्छेम । तत्र च कटाहे जलं तप्तं सत् वर्तेत । ततः उष्णजलं पानपात्रेण किंचित्किंचित् उद्धृत्य अन्यस्मिन् आपूर्य शीतजलेनासिच्य [11]कदुष्णं विधाय स्नामः । तत्रैव [12]उद्वर्तनचूर्णं [13]फेनिका च वर्तेयाताम् । ताभ्यां यथासौकर्यं देहं प्रधाव्य जलेन क्षालयित्वा स्नानं समापयामः ।

अत्रान्तरे मत्पित्रा देवपूजा समापिता भवेत् । वयं च तद्दत्तं तीर्थादिकं स्वीकृत्य भोजनकर्मणि प्रवर्तेम । सूपं शाकं [14]तेमनं [15]लेह्यं [16]चोष्यं दधि घृतं च भोजने उपकरणीकुर्मः ।

एवं आतृप्ति उपभुज्य हस्तौ पादौ च प्रक्षाल्य पाठशालागमनाय त्वरेम मध्याह्ने पुनः पाठशालातः आगतेषु अस्मासु अस्मन्माता [17]पूरिकां दोषकां लड्डुकां पकोडिकां वा यत्किंचन भक्ष्यं प्रकल्प्य अस्मान् भोजयति । वयं च पुनः पाठशालां गत्वा सायं गृहमागच्छेम क्रीडेमहि च मित्रैस्सह । रात्रौ च पाठचिन्तनादिकं कृत्वा दशवादनसमये [18]खट्वायां [19]शय्यायां शयित्वा [20]उपधानोपरि शिरोनिधाय सुखं स्वपिमः ।

---

(1) शोधनी (2) हीटर (3) उष्णीकरोति (4) काफीपौडर (5) डिकाषन् (6) दोसे (7) इड्ली (8) उप्मा (9) पेन्सिल् (10) फौंटेन्पेन् (11) किंचिदुष्णं (12) मुद्गतण्डुलचूर्णं (13) सोप् (14) अचारु (15) चट्नी (16) रसः (17) पूरी (18) मञ्चः (19) बेड् (20) पिल्लो ।

# गोरक्षणमविस्मरणीयम्

गोवधनिरोधोद्यमसन्दर्भे बहवः प्राणा आहुतीकृताः । बहवश्च आहुत्युन्मुखाश्च परावर्तिताः । श्रीप्रभुदत्तब्रह्मचारि श्रीशङ्कराचार्य प्रभृतयः बहुकालमनशनेन सुमहत्तपस्तप्त्वा सर्वकारवचने श्रद्धया आत्माहुतेर्विरताः । निर्वाचनकलकले चैतादृशप्रश्नस्य उपस्थापनं असमंजसमिति बहुजनाभिप्रायः माननीय एव भवति । सर्वकारस्य संकटापादनेन इष्टसाधनप्रयत्नः नीच एव । तन्मनसि एतस्य प्रश्नस्य प्रामुख्यभावनामुत्पाद्य तत्साधनं च साधीयान् मार्गः । एवमालोच्यैव एष उद्यमः तात्कालिकतया स्थगितो वर्तते ।

एवमपि निर्वाचनानन्तरं पुनरपि अयं प्रश्नः सर्वकारस्य अभिमुखीभवेदेव । भारतस्य स्वातन्त्र्यस्य प्रधानं चिह्नं गोरक्षणमेव । जातीयमुद्रायां गोः स्थानं वर्तते । कांग्रेसस्य निर्वाचनचिह्नमपि वृषभद्वयमेव । सर्वेपि नायकाः धान्यक्षीरसमृद्धिमेव अतिशाययितुं यतमाना इव भाषन्ते । अतोपि गोः रक्षणं प्रजानां प्रभुतायाश्च कर्तव्यत्वेन पर्यवस्यति ।

गोवधनिरोधशासनं च प्रादेशिकप्रभुत्वकर्तव्यं वा उत राष्ट्रप्रभुत्वकर्तव्यं वा इत्यत्र नास्माकमाग्रहः । येन केनाप्युपायेन तद्वधो निरोद्धव्यः । गोजातिः पूजनीया पोषयितव्या येन भारतस्यैव शुभं भवेत् ।

अशक्तानां वृद्धानामपि तासां पोषणमादेष्टव्यम् । अथवा तादृशानां पोषणभारः प्रभुत्वेनैव स्वीकर्तव्यः । बहूनां वृद्धानां उपकारभृतिरूपेण भारः उह्यते खलु तेन । तथैव एष भारोपि ओढव्य एव ।

दिलीपस्य एकविंशतिदिनमात्रगोपूजया इष्टसिद्धिरासीत् । सैषा कथा श्रूयते रघुवंशे ।

दिलीपः अयोध्यां पालयन्नासीत् । तस्य सुदक्षिणा नाम्नी महिषी आसीत् । तयोः बहुकालं सन्तानमुखदर्शनभाग्यं नासीत् । ताभ्यां बहूनि व्रतानि चरितानि दानानि आचरितानि नियमा अवलंबिताः चिकित्सादयश्च स्वीकृताः ।

परन्तु पुत्रप्राप्तिः नासीत। तदा तौ स्वकुलगुरुं वसिष्ठमेव शरणं अगमताम्। स च वसिष्ठः तयोरार्तिं विदित्वा ज्ञानदृशा तत्सन्तानाभावहेतुमपश्यत्।

पुरा कदाचित् दिलीपः इन्द्रसहायार्थं स्वर्लोकं गत्वा तत्साहाय्यं संपाद्य प्रतिनिवर्तमानः मार्गपार्श्वे अधिशयितवतीं कामधेनुं प्रदक्षिणनमस्कारादिना न अतोषयत्। आत्मकार्यत्वरया तामनवलोकयन्नेव भुवमाजगाम। एतेन कुपिता सा धेनुः एवमशपत् - यतः त्वं पूजनीयां मां अनादृत्य गच्छसि ततः मत्सन्ततिं अपूजयित्वा ते सन्ततिः न भविष्यतीति। तानि च शापवचनानि ऐरावतघींकारेण रथचक्रकींकारेण च कारणेन दिलीपेन मातलिना वा न श्रुतानि।

अयं च विषयः अद्य वशिष्ठेन ज्ञानदृशावलोकितः। ततः गुरुणा वशिष्ठेन उक्तम् – पूर्वं त्वया कामधेनुविषये कृतः अपराध एव सन्ताननिरोधस्य कारणं भवति। तत्पूजया विना ते सन्ततिर्न भविष्यति। सा च कामधेनुः अद्य ते दुर्लभा भवति। सा इदानीं पातालकोके वरुणेन क्रियमाणस्य यागस्य साहाय्यार्थं पातालमधिवसति। पातालद्वारं च महाभुजंगैः परीतं वर्तते। अतः तत्सुतायाः मदीयायाः धेनोः नन्दिनीनाम्न्याः सेवां कुरु। एषापि ते वांछितं पूरयिष्यति।" इति।

अथ दिलीपः गुरुनिर्दिष्टमार्गेण नन्दिनीं एकविंशतिदिनपर्यन्तं असेवत। प्रातः नन्दिनीं पूजयित्वा सुदक्षिणा नीराजनादिना संभावयति। वत्सकृतक्षीर-पानानन्तरं वनाय प्रस्थितायां धेन्वां यावदाश्रमद्वारं सा अनुसरति, दिलीपश्च निवृत्तपरिवारः धनुर्मात्रसहायः धेनुं अनुगच्छति। तत्र च सः तां मृदुग्रासकबल-दानेन दंशनिवारणेन तां उपचरति। यत्र सा गच्छति तत्र गच्छति, यत्रोपविशति तत्र निषीदति, यत्र जलं पिबति तत्र स तत् पिबति। एवं स सदा तस्याः छायेव अनुवर्तते स्म। एतस्या दर्शनेनैव सिंहव्याघ्रादयो मृगाः दूरमपसरन्ति स्म। आश्रमप्रतिनिवर्तनसमये च सुदक्षिणा आश्रमद्वारे एव प्रत्युद्गता प्रदक्षिणनीराजनादि पूजाभिः सम्मानयति स्म। सा च धेनुः तत्सपर्यां आदरेण गृह्णती प्रसन्ना अवर्तत। क्षीरदोहवत्सपानानन्तरं इष्टाहारप्रदानेन तां संपूज्य तत्समन्तात् दीपादिकं निक्षिप्य राजदम्पती उभयपार्श्वयोः स्थण्डिलशायिनौ धेनुं निद्रितां विज्ञाय तदनन्तरं स्वयं निद्रित्वा तस्याः जागरणात्पूर्वमेव जाग्रतः स्म।

एवं विंशतिदिनपर्यन्तं अचलत। एकविंशतितमे दिनेपि प्रातः कार्यक्रमः यथापूर्वं अन्ववर्तत। वनं गता च धेनुः कांचन गुहामुखं प्राविशत। राजा च प्रान्तशोभामनुभवन्नास्त। अत्रान्तरे धेनोः आर्तनादः अश्रावि। राजनि च निवृत्त-दृष्टौ पश्यति धेनोरुपरि कश्चन सिंहः पतितः अदृश्यत। राजा च गोरक्षणार्थं यदा शरं उद्धर्तुं हस्तमुदस्थापयत तदा स नाचलत्। बाहुप्रतिष्ठम्भविवृद्धिमन्युं भुजगवत् निश्वसन्तं राजानं दृष्ट्वा सिंहः मनुष्यवचनैः अवोचत — "हे राजन्, अहं कुम्भोदरो नाम शिवसेवकः अत्र देवदारुद्रुमरक्षणे नियुक्तोऽस्मि। मन्निरामाय न केवलं भवान्, इन्द्रोपि न समर्थः। अतः तूष्णीं प्रतिनिवर्तस्व" इति। तच्छ्रुत्वा राजा तं प्रार्थितवान् — हे कुम्भोदर, त्वदाहारतया मां उपयुज्य इमां विसृज" इति। स च "प्रजापालनतत्परस्य तव नाशो नोचितः, एतस्याः एकस्याः नाशेपि बहुधेनुसमर्पणेन त्वं गुरुं तोषयितुमसि शक्तः। अतः आत्मानं संरक्ष्य प्रतिनिवर्तस्व" इति अवदत।

अथापि राजा आत्मग्रहणेन धेनोर्विमोचनमेव प्रार्थयत। अन्ततः सिंहः तस्य प्रार्थनामङ्गीचकार। राजा च सिंहार्पणाय आत्मानं पिंडवत् संकोच्य अधोमुखः यावदतिष्ठत् तावत् तस्य पृष्ठे सिंहनखदंष्ट्रास्थाने दिव्यपुष्पवृष्टिः अपतत्। विस्मितस्स यदा उत्थितोऽपश्यत तदा नन्दिनी केवलं अदृश्यत, सिंहस्य वार्तैव नासीत्।

विस्मितं तं दृष्ट्वा सा धेनुरवदत् – "राजन्, किं विस्मितोऽसि? एषा मदीया कल्पनैव त्वत्परीक्षार्थम्। सन्तुष्टास्मि तव सेवया। पिब मत्पयः उत्तमस्ते पुत्रः भविष्यति" इति। राजा च तद्वचनं निशम्य गुरवे निवेद्य तदनुमतं पयः पास्यामीत्यवोचत्। आश्रमागमनानन्तरं च विदितवेदितव्येन गुरुणा चोदितः वत्सपीतशेषं दुग्धं राजा अपिबत्। तदनुग्रहेण च दिलीपस्य वंशकर्ता रघुः पुत्रः अजायत।

एतादृशस्य कामगोसन्ततेः वधः भारतदेशस्यैव लज्जाकरः भवति। अतः गोरक्षणे सर्वैः प्रयतितव्यम्।

॥ गोब्राह्मणेभ्यश्शुभमस्तु नित्यम् ॥

# मुक्तकानि

## ले० न. च. वे. नरसिंहाचार्यः

### मङ्गलाशासनम्

काकोलो यस्य पेय, शिशुतुहिनकिरश्शेखरो, नागनाथो
जूटग्रन्थिः, करोटिग्रथितगललसद्धार एकावली च ।
वामांगे धर्मपत्नी, गलिततरुणिमा सौरभेयश्च वाहः,
कृत्तिर्वासो, निवासः पितृभवनमही, नागवक्त्रषडास्यः
पुत्रौ, भस्माऽङ्गरागश्च, तिलकमनलः, पारिषद्याश्च भूताः,
इत्थं वैचित्र्यधाम्ना परिकरविभवेनाऽपि युक्तोऽद्वितीयः ।
नित्यं सोऽनष्टमूर्तिर्विसृमरमहिमाऽप्यष्टमूर्तिस्सुरेड्य-
श्शम्भुर्गङ्गाभुजङ्गो जगदिदमवतात्क्लेशजातं व्युदस्य ॥

अम्बैते गोपबाला वितथवचनका, नाऽहमाश्नां मृदं, किं
मुखोंवाऽहं तथाम्या, मितिवदनसरोजातमग्रे जनन्याः ।
व्यादायानन्तसलीलं कपटनटनकृद्यो हि लोकान् प्रदर्श्य
द्विस्सप्ताऽऽश्चर्यमुग्धामकुरुत; स सदाऽव्यान्न आभीरडिम्भः ॥

### भगवतः पक्षपातः

बीभत्सोऽभूत, "नाऽहं रणभुवि बिभृयाञ्जतुहेतिङ्करेणे"-
त्येवं मन्थामकार्षीः स्वदनु तव पदाब्जातयुग्मप्रपन्नः ।
भीष्मोऽपि त्वाङ्कथञ्चिरवरविशिखमुखैर्विह्वलीकर्तुमैच्छत;
पश्चाज्जन्ये प्रसक्ते स्वमविनुभवशश्शस्त्रपाणिः प्रतिज्ञां

हृष्टोऽत्याक्षीस्स्वकीयां; किमिति ? ननु मया ज्ञातं, मात्मन्यवज्ञां
सोढ्वा गांगेयमेवं कुरुकुलमहितं तीर्णमन्थं विधाय,
कृष्णामात्मस्वसारं त्वयि निहितभरां तां पुरन्ध्रीञ्च कृत्वा
सौमंगल्याविमुक्ता, महह ! बहुमुखी कृष्ण लीलामतानीः ॥

## कुसुमान्योक्तिः

उद्यतारुण्यमीलन्नयन कुसुम रे मर्त्यलोकप्रपूगं स्वं
मोहाद्व्वक्सौरभं त्वं दिशि च विदिशि चेद्वाहयेर्मारुतेन,
तद् घ्रात्वाऽऽगत्य हा ! त्वामबचिनुयुरवाच्छिद्य च स्वार्थिलोकाः
एवं ते चापलं तत्परिणतिविषमं सम्भवे; तद्धि भुङ्क्ष्व ॥

## गुरुनिर्वेदः

ब्रह्मन् पातय मां मृगेन्द्रवदने, शार्दूलदंष्ट्रान्तरे,
दावाग्नावपि भृज्ज, मूर्ध्नि नितरां दम्भोलिना वा जहि ।
कामं पायय मां हलाहलं, मथो सज्जोऽस्मि, किन्तु प्रभो
शिष्यस्याऽरसिकस्य पाठनविधिं मा फालके मे लिख ॥

पाठने विमुखधीरतियूर्खो वीक्षतेऽन्यविषयेरितदृष्टिः ।
मन्यते च निखिलं विदितं यो, वञ्चितं स्वमयमत्र करोति ॥

## छात्रवेदना

सिंहस्योग्रमुखे पतेय, मथवा वह्नौ समुद्रान्तरे
कुम्भीपाकमथाऽपि वा वरमिति प्रत्येमि, भीतिर्न मे ।
भण्डस्याऽरसिकस्य नित्यमरसस्याचार्यवर्यस्य स-
च्छात्रप्रश्नसमाधिदानसरुषो हस्तेतु मां मा निधाः ॥

## विधिविलासः

विधौ वामारम्भे सृजति सततं विघ्नविततिं
कथं सिद्धिं प्राज्ञः पुरुषवृषभो वाऽपि लभताम् ?
गतासूये तस्मिन् परिणति कालेऽपि सुमुखे
भवेद्वैधेयो वा भृशमकुशलो वाऽपि स कृती ॥

## गुणोऽनर्थः

दुर्मुखैर्हिंस्यते हन्त वाग्मी साधुरसाधुभिः ।
काकलोकैर्हन्यमानः कोकिलोऽत्र निदर्शनम् ॥

## स्वार्थपरता

[1]रोदित्येकः श्मश्रुदाहाद्विपन्नो याचत्यग्निं [2]धूपवर्त्यैतमन्यः ।
एवं लोकः स्वार्थसिद्ध्येकतानो नान्यस्यार्तिं जातु किञ्चिद्विनक्ति ॥

## [3] कण्टकः

क्षुद्रशत्रुरिति मा कृथा मनाक् जातु चिद्विगणनां विमूढधीः ।
ईश्वरोऽपि ननु कण्टकास्पदं केतकीदलमहो जहाति यत् ॥

## आधारानुगुणा गुणाः

[4]अमिअसरिच्छं छीरं वितरइ गोणी तणं वि खाऊण ।
णवरं विस मुग्गिरइ अमप्पो छीरं पिऊण महुरं वि ॥

[अमृतसदृशं क्षीरं वितरति गौस्तृणमपि खात्वा ।
केवलं विषमुद्गिरति च सर्पः क्षीरं पीत्वा मधुरमपि] (छाया)

## दम्भः

[5]दुर्गतिदूनोऽपि जनस्त्यजति न नाम प्रभुत्वचिह्नं तत् ।
[6]राजशिखामणितां स्वां नोज्झति भिक्षामटन् कपाली यत् ॥

## अनुकम्पा दुर्बलेषु

माऽवज्ञया चर कृशेष्वपि मांसलत्वात्
त्वं हन्त! तेन हि भवेर्न किमात्तगन्धः ?
ईशोऽपि कैतकदलं परिभूय चन्द्र-
रेखात्मना शिरसि तेन विलङ्घितोऽभूत् ॥

## शालीनता

[7]यत्रांऽघ्रिन्यसनाय बिभ्यति बुधाश्शालीनभावं श्रिताः,
तत्रैव प्रसभं विशन्ति विगतव्रीडाः खलाः खल्वमी ।
पूर्वे कर्मसु धन्यतां कृतधियोऽव्यग्रा भजन्तेऽनिशं;
पङ्गुत्वन्तु परे भजन्त्यकृतिनस्त्वौत्सुक्य[8]वातेरिताः ॥

---

1. आन्ध्रभाषामयीं लोकोक्तिमाश्रित्य 2. धूपवर्तिः Cigarette, Cigar of the like. Ref :- "परिपीतधूपवर्तिरुपस्पृश्य च"—कादम्बरी 8 कण्टकः = "सूच्यग्रे क्षुद्रशत्रौ च" 4. हिन्दीमातृकमेतत् 5 दुर्गतिः दारिद्र्यम् 6 राजशिखामणिताम् = नृपश्रेष्ठतां, चन्द्रशेखरत्वञ्च । 7 Fools rush in where angals fear to tread 8. वातः = वायुः वातप्रकोपजनितो व्याधिश्च ।

## नागपट्टणशाखायाः
## नूतनकार्यवर्गः एवं निर्वाचितः

१. आत्मविद्याभूषणः

श्री S. नारायणय्यङ्गार्

अध्यक्षः

२. R. सुब्रह्मण्य अय्यर M. A., L. T,

प्रधानोपाध्यायः

H. M. N. High School,

उपाध्यक्षः

३. N. R. सुब्रह्मण्य अय्यर B. Sc, B. L.,

Advocate

उपाध्यक्षः

४. श्री महादेवशास्त्री, शिरोमणिः

कार्यदर्शी

५, श्री वि. नारायण अय्यर

कोशाध्यक्षः

६. श्री आर. गोपाल अय्यर,

Retd. Headmaster

७. श्री R सुब्रह्मण्य अय्यर,

कार्यनिर्वाहकसदस्यौ

# शोकवार्ता

मछलीपट्टणशाखायाः सभ्यशेखराः आन्ध्र-जातीयकलाशालायाः प्रधानोपन्यासकाश्च श्री मोदलि शिवकामार्य महोदयाः माघशुक्लप्रथमातिथौ भौतिकं देहमत्याक्षुरिति परमं संस्कृतजगतः शोकस्थानम् । अस्य महाशयस्य प्रोत्साहेनैव तच्छाखायाः कार्यक्रमः निरन्तरायं पुरस्सरति स्म । एतस्य महाभाग्यस्य अस्तमयात् किमालम्बना सभाशाखा भवेदिति न ज्ञायते ।

— प्रधानमन्त्री

# कालमानोपपत्तिः

रचयिता :—

**श्री राणी नृसिंहचयनः**
(सर्वतन्त्रस्वतन्त्रः, दैवज्ञसार्वभौमः, सांख्याचार्यः)
संस्कृतश्लोकैः अनुवादकः

**श्री राणी वेङ्कटाचलपति प्रसादचयनः,**
प्राध्यापकः, श्रीवेङ्कटेश्वरायुर्वेदकलाशाला
विजयवाडा – १.

मूल्यम् – रू. २–००

प्राप्तिस्थानम् —
Sri Rani Venkatachalapathi Prasad Mahagnichit
LECTURER,
Sri Venkateswara Ayurveda College,
Vijayawada-1.

विमर्शः – इदं पुस्तकं "कालमानोपपत्ति" नामकं खगोलविषयकं आन्ध्रः भाषायां भावणात्मकं संस्कृते च श्लोकरूपेण अनूदितं च खगोलविद्यार्थिनां कृते बहूपयुक्तम् । पाश्चात्यविदुषामपि अज्ञाता विषयाः अस्मत्प्राचीनभारतीयशास्त्रज्ञैः निरूपिता इति साधितमनेन ।

भारतीयपञ्चाङ्गेषु ब्रहोः कालादारभ्य निर्दिश्यमानानां नानाविधानां मानानां मध्ये ब्रह्मप्राजापत्यमानद्वारा नामान्तरैः व्यवह्रियमाणानां अनिरुद्ध, प्रद्युम्न, संकर्षणगोलानां गमनविशेषादिकं गणितशास्त्ररीत्या प्रतिपादितम् ।

एवमेव पुराणेतिहासादिषु प्रोक्तानां युगानां, महायुगानां मन्वन्तराणां, कल्पानां च अन्वर्थतां निरूपयतीदं पुस्तकम् ।

किंच, अस्मिन् ग्रन्थे वैष्णवागम - सांख्यशास्त्रादीनां च खगोलशास्त्रेण ऐककण्ठं प्रतिपादितम् ।

अस्मिन् महति खगोलशास्त्रविचारे आर्याणां बीजं यवनानां क्षेत्रं च गणितशास्त्रमालम्ब्य परिशोधनं कृतमस्ति । प्रद्युम्नस्य मीनकेतनत्वं, अभिजिन्नक्षत्रस्य "मकरध्वजत्वं" वैवस्वत, चाक्षुषादि मन्वन्तराणां सार्थकत्वं च निरूपितम् ।

एवं पुराणेतिहासादिषु प्रतिपादितानां बहूनां अंशानां अद्यत्वेऽनन्वितानां इव दृश्यमानानां तत्तच्छास्त्रीय हकवर्थेन समन्वयं सम्पादयतां एतादृशानां महोदयानां गैर्वाणी चिरं ऋणिनी भूयादिति मन्यामहे ।

# आयुर्विज्ञानम्

रचयिता :—

वैद्यवल्लभः, सर्वतन्त्रस्वतन्त्रः,

**श्रीराणी वेङ्कटाचलपति प्रसादचयनः,**

प्राप्तिस्थानम् —

**प्रधानोपन्यासकाः,**

श्री आयुर्वेदकलाशाला,

विजयवाडा– 1.

मूल्यम् रू. २–००

इदं आयुर्विज्ञानम्, श्रुतिस्मृत्यादि बहुलप्रमाणै रुपबृंहितं सत् जिज्ञासूनां आधुनिकविज्ञानमार्गेण परिशोधने प्रवृत्तानां च बहूप्युज्यते ।

अत्र आयुर्वेद - ज्योतिश्शास्त्राणां महान् भागः प्रभावश्चास्ति ।

आयुषो वैविध्यं सोम्यं, पौरुषमिति निरूपितं पौरुषमपि वार्षिकशतभागिक-भेदेन द्विधेति, वार्षिकं च ग्रहाश्रयं छान्दसमिति, शतभागिकं-ऐन्द्रियकं रासायनिक-मिति च भिद्यत इति निरूपितम् ।

अत्र आयुषः सोम्यत्वविचारः पाराशर्यविचारश्च विपुलतया कृतः । रव्यादि-महादशा परिणामक्रमस्य अग्नीषोमत्व निबन्धनं वर्षसंख्यानियमं सम्यगुपपादयति । एवं तत्तद्ग्रहकक्षाणां पूर्वोत्तरभावं ब्रह्माण्डसृष्टिक्रमेण निरूपयितुं च प्रवृत्तमिदम् ।

अत्रायुर्विचारे ग्रहचारप्रभावं निरूपयत्ययं ग्रन्थः । कृत्तिकादिनक्षत्रपरि-गणनायामपि उपपत्तिर्दर्शिता । नूतनोऽयं विमर्शात्मको स्वविषयनिरूपणे । एतादृशः उपपादका ग्रन्थाः बहुला भवेयुः । रचयितारः श्रीराणी वेंकटाचलपति प्रसादचयनाः गैर्वाणीयाः अभिनन्दनीयाः ।

काले काले एवं आर्षविज्ञानोपपादकाः ग्रन्थाः प्रकाशिता भूयासुः ।

# प्रार्थना

संस्कृतरसिकाः, भारतीयाः,

गैर्वाणीयं पञ्चवर्षप्रभृति आर्थिकसंकटे महति वर्तमानेपि त्रैमासिकीत्वात् पुरस्सरीभूय मासिकीत्वमालम्ब्य यथासमयं निस्सरति, संस्कृतसेवां यथाशक्ति आचरतीति सुविदितमेव भवताम् ।

एतावत्पर्यन्तं भारतीयसर्वकारस्य यत्किञ्चिदनुदानं लब्धमासीत् येन अस्याः पाथेयं तत् प्राणरक्षणायालमासीत् । एतद्वर्षे संस्कृतपत्रिकाणां अनुदानविषये भरतवाक्यस्य श्रुतिसम्मेलनमाचरति भारतसर्वकारविद्याविभागः । तत्सूचनात्वेन तेन पत्रिकाप्रकाशानां हस्तं प्रापितः कश्चन लेखोपि ।

अतः संस्कृताभिमानिनः एव इतःपरं संस्कृतभाषां तत्पत्रिकाश्च पोषयेयुः, न प्रभुत्वमुखं पश्येयुः । अन्यथा भारतीयसंस्कृतेरेव विनाशः सद्यः सम्भवेत ।

अतस्सहृदयाः,

व्यक्तिशः प्रार्थनायामशक्ति अस्माकं अनुसन्धाय इमां प्रार्थनामङ्गीकृत्य स्वस्वविषयकमेव विभाव्य वार्षिकं चतूरूप्यकान्यून स्वच्छन्दं प्रेषयित्वा पोषयन्तु एतां लभन्तां च एतत्सेवाः यथापूर्वम् ।

इति प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R.C.No. 27-A 3/65 Date 14-7-65.

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिका

सर्वस्वापहरो न दस्युकुलजः
खट्वांगभृन्नेश्वरो
दोषानिष्टकरो न धर्मनिरतः
कीलालपो नाऽसुरः ।
नृणां पृष्ठपलाशनो न पिशुनः
शीघ्रगमो नो हयः
शश्वद्रात्रिचरो न तस्करगणो
कोयं सखि ब्रूहि मे ॥

[मत्कुणः]

एष च सर्वस्य स्वापं हरति, खट्वायाः पादे तिष्ठति, रात्रौ अनिष्टं करोति, रक्तं पिबति, पृष्ठभागीयं मांसं अश्नाति, शीघ्रं गच्छति, बहुशः रात्रौ संचरति ।

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate &
Secretary, S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at vijaya Press, Chittoor, (A. P.) C. 1500